Digitized by Arya Samaj Foundation Chennai and eGangotri



देशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥३५॥ नत्व-
नित्याधिकारो ऽस्ति विधौ नित्येन सम्ब-
न्धस्तस्माद्‌वाक्यशेषत्वम् ॥ ३६ ॥ सति च
नैकदेशेन कर्त्तुः प्रधानभूतत्वात् ॥ ३७ ॥
कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥ कर्त्तुः स्या-
दिति चेत् ॥३९॥ न गुणार्थत्वात् प्राप्ते च
नोपदेशार्थः ॥४०॥ कर्मणोस्तु प्रकरणे तन्न्या-
यत्वाद् गुणानां लिङ्गेन कालशास्त्रं स्यात्
॥४१॥ यदि तु सान्नाय्यं सोमयाजिनो न ता-
भ्यां समवायोस्ति विभक्तकालत्वात् ॥४२॥
अपि वा विहितत्वाद् गुणार्थायां पुनः-
श्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद यथा-
नभिप्रेतः तथाऽऽग्नेया दर्शनादेकदेवते ॥४३॥
विधिं तु बादरायणः ॥ ४४ ॥ प्रतिषिद्धवि-
ज्ञानाद्वा ॥४५॥ तथा चान्यार्थदर्शनम् ॥४६॥
उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रु-
तित्वाद् यथाकामी प्रतीयेत ॥४७॥ ध्रौवा-
द्वा सर्वसंयोगात् ॥ ४८ ॥ तद्वच्च देवतायां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्यात् ॥ ४९ ॥ तान्त्रीणां वा प्रकरणात् ॥५०॥ धर्माद्वा स्यात् प्रजापतिः ॥ ५१ ॥ देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥५२॥ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्यात् हौत्रस्य तत्र दर्शनात् ॥५३॥ अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथा प्रधानं स्यात् ॥५४॥ आनन्तर्य्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्याविकारे ॥५५॥ अग्नीषोमापिधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥ प्रतिषिद्धयविधानाद् वा निष्णुः समानदेशः स्यात् ॥ ५७ ॥ तथा चान्यार्थदर्शनम् ॥ ५८ ॥ न चानङ्गं सकृत्कृतावुभयत्र विधीयेताऽसम्बन्धात् ॥ ५९ ॥ गुणानां च परार्थत्वात्, प्रकृतौ विधिलिङ्गानि दर्शयति ॥६०॥ विकारे चाश्रुतित्वात् ॥६१॥ द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥६२॥ अकामिकरणार्थत्वाच्च

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥६३॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥६४॥ अशिष्टेन च सम्बन्धात्॥६५॥ उत्पत्तेस्तु निवेशः स्याद् गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद् विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावे ऽश्रुतौ स्यात् ॥६६॥ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात्॥६८॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥६९॥ प्रशंसार्थमजामित्वम् ॥७०॥

इति दशमाध्यायस्य अष्टमः पादः ॥

अथैकादशो ऽध्यायः ।

प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥२॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद्विधानात् प्रतिप्रधानभावः स्यात् ॥४॥ अङ्गानान्तु शब्दभेदात् क्रतुवत् स्यात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



फलान्यत्वम् ॥ ५ ॥ अर्थभेदस्तु तत्रार्थेहैका-
र्थ्यादैककर्म्यम् ॥६॥ शब्दभेदान्नेति चेत् ॥७॥
कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थ-
त्वात् ॥८॥ कर्तृविधेर्नानार्थत्वाद् गुणप्रधा-
नेषु ॥९॥ आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥
एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्व-
न्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥११॥ फला-
भावान्नेति चेत् ॥ १२ ॥ न, कर्मसंयोगात्
प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥ ऐक-
शब्द्यादिति चेत् ॥ १४ ॥ नार्थपृथक्त्वात्स-
मत्वादगुणत्वम् ॥ १५ ॥ विधेस्त्वेकश्रुति-
त्वादपर्य्यायविधानाद् नित्यवच्छ्रुतभूता-
भिसंयोगात् अर्थेन युगपत् प्राप्तेर्यथाप्राप्तं
स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः
स्यात् ॥१६॥ तथा कर्मोपदेशः स्यात् ॥१७॥
क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्व-
श्रुतित्वाद्विशेषाणां कृतार्थत्वात् स्वदोहे
यथा कामी प्रतीयेत ॥१९॥ कर्मण्यारम्भ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः ॥२०॥ अधिकाराश्च सर्वेषां कार्य्यत्वादुपपद्यते विशेषः ॥ २१ ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ २२॥ शब्दार्थश्च तथा लोके ॥२३॥ अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥२४॥ ऐकशब्द्यात् तथाङ्गेषु ॥ २५ ॥ लोके कर्माऽर्थलक्षणम् ॥ २६ ॥ क्रियाणामर्थशेषत्वात् प्रत्यक्षो ऽतस्तन्निर्वृत्त्या ऽपवर्गः स्यात् ॥२७॥ धर्मनात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ।२८।क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात् ॥२९॥ सकृद्वा कारणैकत्वात् ॥३०॥ परिमाणं चानियमेन स्यात् ॥३१॥ फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥३२॥ अर्थवतस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥३३॥ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४॥ अन-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात् ॥३५॥ अभ्यासो वा छेदनसंमार्गाऽवदानेषु वचनात्सकृत्त्वस्य ॥३६॥ अनभ्यासस्तु वाच्यत्वात् ॥३७॥ बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥ दृष्टः प्रयोग इति चेत् ॥३९॥ भक्त्येति चेत् ॥४०॥ तथेतरस्मिन् ॥४१॥ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४२ ॥ श्रुत्यर्थाविशेषात् ॥४३॥ तथा चान्यार्थदर्शनम् ॥४४॥ प्रकृत्या च पूर्ववत् तदासत्तेः ॥४५॥ उत्तरासु न यावत् स्वमपूर्वत्वात् ॥४६॥ यावत्स्वं वान्यविधानेनानुवादः स्यात् ॥४७॥ साकल्यविधानात् ॥४८॥ बह्वर्थत्वाच्च ॥४९॥ अग्निहोत्रे चाशेषवद्यवागूनियमः ॥५०॥ तथापयः प्रतिषेधः कुमाराणाम् ॥५१॥ सर्वप्रापिणापि लिङ्गेन संयुज्यते देवताभिसंयोगात् ॥५२॥ प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥५३॥ क्रमकोपश्च यौगपद्ये स्यात् ॥५४॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ॥ ५५ ॥ ऐकार्थ्यादव्यवायः स्यात् ॥५६॥ तथा चान्यार्थदर्शनं कामुकायनः ॥५७॥ तद्व्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५८ ॥ असंस्पृष्टोऽपि तादर्थ्यात् ॥५९॥ विभवाद्वा प्रदीपवत् ॥ ६० ॥ अर्थात्तु लोके विधितः प्रतिप्रधानं स्यात् ॥ ६१ ॥ सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥६२॥ विधेस्त्वितरार्थत्वात् सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥६३॥ विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः ॥६४॥ अपि चैकेन सन्निधानमविशेषको हेतुः ॥६५॥ क्वचित् विधानान्नेतिचेत् ॥६६॥ न विधेश्चोदितत्वात् ॥६७॥ व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६८ ॥ भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रदानकालत्वात् ॥ ६९ ॥ तथा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



चान्यार्थदर्शनम् ॥ ७० ॥ विधिरिति चेत् न वर्त्तमानापदेशात् ॥ ७१ ॥

इति एकादशाध्यायस्य प्रथमः पादः ॥

---

एकदेशकालकर्त्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥ अविधिश्चेत् कर्मणामभिसम्बन्धः प्रतीयेत तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥ अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात् कर्मणोऽश्रुतत्वाच्च ॥ ६ ॥ अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम् ॥ ७ ॥ द्रव्यदेवतं तथेति चेत् ॥ ८ ॥ न चोदनाविधिशेषत्वात् नियमार्थो विशेषः ॥ ९ ॥ तेषु

१६

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ १० ॥ इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ ११ ॥ कालभेदान्नेति चेत् ॥ १२ ॥ नैकदेशत्वात् पशुवत् ॥ १३ ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥ तथा तदवयवेषु स्यात् ॥ १६ ॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १७ ॥ तथा स्यादध्वरकल्पेष्टौ विशेषस्यैककालत्वात् ॥ १८ ॥ इष्टिरिति चैकवच्छ्रुतिः ॥ १९ ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ २० ॥ प्रथमस्य वा कालवचनम् ॥२१॥ फलैकत्वादिष्टिशब्दो यथान्यत्र ॥२२॥ वसाहोमस्तन्त्रम् एकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २३ ॥ कालभेदात्त्वावृत्तिर्दे-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वताभेदे ॥२४॥ अन्ते यूपाहुतिस्तद्वत् ॥२५॥ इतरप्रतिषेधो वा ॥ २६ ॥ अशास्त्रगत्वाच्च देशानाम् ॥ २७ ॥ अवभृथे प्रधाने ऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २८ ॥ द्रव्यदेवतवत् ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥ शब्दविभागाच्च देवतानपनयः ॥३२॥ दक्षिणे ऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते ॥ ३३ ॥ अचोदनेति चेत् ॥ ३४ ॥ स्यात् पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ इहापि मारुत्याः प्रयोगश्चोद्यते ॥ ३७ ॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् ॥ ४० ॥ आम्नायवचनं तद्वत् ॥ ४१ ॥ कर्तृभेदस्तथेति चेत् ॥ ४२ ॥ न समवायात् ॥ ४३ ॥ लिङ्गदर्शनाच्च ॥ ४४ ॥ वेदिसंयोगादिति चेत् ॥ ४५ ॥ न देशमात्रत्वात् ॥ ४६ ॥ एकाग्नित्वापरेषुद तन्त्रैः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्यात् ॥४७॥ नाना वा कर्त्तृभेदात् ॥ ४८ ॥ पर्य्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥४९॥ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥५०॥ वपानां चानभिघारणस्य दर्शनात् ॥ ५१ ॥ पशुशारदीयास्तथेति चेत् ॥५२॥ न चोदनैकवाक्यत्वात् ॥५३॥ संस्काराणां च तद्दर्शनात् ॥५४॥ दशपेये क्रयप्रतिकर्षात् प्रतिकर्षः ततः प्राचान्तत्समानं तनत्वं स्यात् ॥५५॥ समानवचनं तद्वत् ॥५६॥ अप्रकर्षो वा ऽर्थहेतुत्वात् सहत्वं विधीयते ॥५७॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५८ ॥ दीक्षाणां चोत्तरस्य ॥५९॥ समानः कालसामान्यात् ॥६०॥ निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात्॥६१॥ अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥६२॥ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥६३॥ उदयनीये च तद्वत् ॥ ६४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिपत्तिर्वा ऽकर्मसंयोगात् ॥६५॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात्॥६६॥

इति एकादशाध्यायस्य द्वितीयः पादः ॥

---

अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥ द्रव्यस्य कर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात् ॥ २ ॥ यूपश्चाकर्मकालत्वात् ॥३॥ एकयूपं च दर्शयति ॥४॥ संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥५॥ तत्कालस्तु यूपकर्मत्वात्तस्य धर्मविधानात् सर्वार्थानां च वचनादन्यकालत्वम् ॥६॥ सकृन्मानं च दर्शयति ॥७॥ स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥ साधारणे वा ऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्तिदर्शनात् ॥१०॥ तत्कालो वा प्रस्तरवत् ॥ ११ ॥ न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥ १२ ॥ अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधाद-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्ते प्रथमे वाहनि विकल्पः स्यात् ॥ १३ ॥ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात् प्रातःसवनमध्यात्वाच्छिष्टं चाभिप्रवृत्तत्वात् ॥१४॥ वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥१५॥ पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १६ ॥ अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकः स्यात् ॥ १७ ॥ प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥ अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपवृत्तार्थत्वात् ॥ १९ ॥ अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥२०॥ सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥२१॥ तत्कालत्वादावर्तेत प्रयोगतो विशेषसंबन्धात् ॥२२॥ अप्रयोगाङ्गमिति चेत् ॥ २३ ॥ प्रयोगनिर्देशात् कर्तृभेदवत् ॥२४॥ तद्भूतस्थानादग्निवदिति चेत् तदपवर्गस्तदर्थत्वात् ॥२५॥ अग्निवदिति चेत् ॥ २६ ॥ न प्रयोगसाधारण्यात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥२७॥ लिङ्गदर्शनाच्च ॥२८॥ तद्धि तथेति चेत् ॥ २९ ॥ न शिष्टत्वादितरन्यायत्वाच्च ॥ ३० ॥ विध्येकत्वादिति चेत् ॥३१॥ न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ॥३२॥ लौकिके तु यथाकामी संस्कारानर्थलोपात् ॥ ३३ ॥ यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥३४॥ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥३५॥ मुख्यधारणं वा मरणस्यानियतत्वात् ॥३६॥ यो वा यजनीयेहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥३७॥ न शास्त्रलक्षणत्वात् ॥ ३८ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥३९॥ शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥ तथाऽऽशिरे ॥ ४१ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद् भूतोपदेशः ॥४२॥ प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् ॥४३॥ अग्न्याधेये वा विप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥४४॥ प्रतिपत्ति-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्वा यथान्येषाम् ॥४५॥ उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४६ ॥ अङ्गविपर्यासो विना वचनादिति चेत् ॥४७॥ उत्कर्षः संयोगात् कालमात्रमितरत्र ॥४८॥ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥ ४९ ॥ न श्रुतिप्रतिषेधात् ॥५०॥ विकारस्थाने इति चेत् ॥ ५१ ॥ न चोदनापृथक्त्वात् ॥ ५२ ॥ उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षे ऽनन्वयः ॥५३॥ वाक्यसंयोगाद् वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५५ ॥

एकादशाध्यायस्य तृतीयः पादः ॥

---

चोदनैकत्वाद्राजसूये ऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥ प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥२॥ तथा चान्यार्थदर्शनम् ॥३॥ अनियमः स्यादिति चेत् ॥४॥ नोपदिष्टत्वात् ॥ ५ ॥ लाघवातिपत्तिश्च ॥ ६ ॥ प्रयोजनैकत्वात् ॥ ७ ॥ विशेषार्था पुनः श्रुतिः ॥ ८ ॥ अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ९ ॥ वचनात् कामसंयोगेन ॥ १० ॥ क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ११ ॥ पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥१२॥ लिङ्गदर्शनाच्च ॥१३॥ वर्तमानापदेशाद्वचनात्तु तन्त्रभेदः स्यात् ॥१४॥ सहत्वे नित्यानुवादः स्यात् ॥१५॥ द्वादशाहे तु प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात्१४ अह्नां वाश्रुतिभूतत्वात तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १७ ॥ अपि वा फलकर्तृसम्बन्धात् सह प्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥१९॥ तदपेक्षं च द्वादशाहत्वम् ॥२०॥ दीक्षोपसदां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥२१॥ तथा चान्यार्थदर्शनम् ॥२२॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥२३॥ भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् ॥ २४ ॥ तथा चान्यार्थदर्शनम् ॥२५॥ श्वःसुत्यावचनं तद्वत् ॥२६॥ पश्वतिरेकश्च ॥२७॥ सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥२८॥ अपि वेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् अविभागाच्च ॥२९॥ पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात् ॥३०॥ भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ ३१ ॥ अर्थाद्वा लिङ्गकर्म स्यात् ॥३२॥ अयाज्यत्वाद्वसानां भेदः स्यात् स्वयाज्याप्रदानत्वात् ॥३३॥ अपि वा प्रतिपत्तित्वात् तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् ॥३४॥ सकृदिति चेत् ॥३५॥ न कालभेदात् ॥३६॥ जात्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्तरेषु भेदः पक्तिवैषम्यात् ॥३७॥ वृद्धिदर्शनाच्च ॥३८॥ कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥३९॥ प्रतिप्रधानं वा प्रकृतिवत् ॥४०॥ सर्वेषां चाभिप्रथनं स्यात् ॥४१॥ एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् *४२ द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ ४३ ॥ निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् ॥ ४४ ॥ द्रव्यान्तरवद्वा स्यात् तत्संस्कारात् ॥ ४५ ॥ वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४६ ॥ एकस्य वा गुणविधिः द्रव्यैकत्वात् तस्मात् सकृत् प्रयोगः स्यात् ॥ ४७ ॥ कण्डूयने प्रत्यङ्गं कर्मभेदात् स्यात् ॥ ४८ ॥ अपि वा चोदनैककालमेककर्म्यं स्यात् ॥ ४९ ॥

* एतदग्रे "तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रास्यासकृत् प्रयोगः स्यात्" इति सूत्रं क्व चिद्दृश्यते ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥ प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥ उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५२ ॥ न सन्निपातित्वादसन्निपातिकर्मणां विशेषग्रहणे कालैकत्वात् सकृद्वचनम् ॥५३॥ हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात् ॥५४॥ अध्रिगोश्च विपर्यासात् ॥ ५५ ॥ करिष्यद्वचनात् ॥ ५६ ॥

इति एकादशाध्यायस्य चतुर्थः पादः ॥

समाप्तश्चैकादशो ऽध्यायः ॥

---

तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वमतुल्येषु तु भेदः स्यात् विधिप्रक्रमतादर्थ्यात् श्रुतिकालनिर्देशात् ॥ १ ॥ गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च न भेदः स्यादर्थस्य विकृतत्वात् ॥ ४ ॥ एकेषां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाशक्यत्वात् ॥ ५ ॥ एकाग्निवच्च दर्शनम् ॥ ६ ॥ जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रः प्रतिषेधः स्यात् ॥ ७ ॥ नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥ अकर्म वा कृतदृषा स्यात् ॥ ९ ॥ पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥ शामित्रे च पशुपुरोडाशेन स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥ श्रपणं चाऽग्निहोत्रस्य शालामुखीये न स्यात् प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥ हविर्द्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ॥ १४ ॥ असिद्धिर्वा ऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १५ ॥ अनसाञ्च दर्शनात् ॥ १६ ॥ तद्युक्तञ्च कालभेदात् ॥ १७ ॥ मन्त्राश्च सन्निपातित्वात् ॥ १८ ॥ धारणार्थत्वात् सोमे ऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥ तथा व्रतमुपेतत्वात् ॥ २० ॥ विप्रतिषेधाच्च ॥ २१ ॥ सत्यवदिति चेत् ॥ २२ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

न संयोगपृथक्त्वात् ॥२३॥ ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥२४॥ शेषवदिति चेत् ॥२५॥ न वैश्वदेवो हि ॥२६॥ स्याद् व्यपदेशात् ॥२७॥ न गुणार्थत्वात् ॥२८॥ सन्नहनञ्च वृत्तत्वात् ॥२९॥ अन्यविधानादारण्यभोजनं न स्यादुभयं वृत्त्यर्थम् ॥३०॥ शेषभक्षास्तथेति चेत् नान्यार्थत्वात् ॥३१॥ भृतत्वाच्च परिक्रयः ॥३२॥ शेषभक्षास्तथेति चेत् ॥३३॥ न कर्मसंयोगात् ॥३४॥ प्रवृत्तवरणात् प्रतितन्त्रवरणात् प्रतितन्त्रवरणं होतुः क्रियेत ॥ ३५ ॥ ब्रह्मापीति चेत् ॥३६॥ न प्राक् नियमात्तदर्थं हि ॥३७॥ निर्दिष्टस्येति चेत् ॥३८॥ नाश्रुतत्वात् ॥३९॥ होतुस्तथेति चेत् ॥४०॥ न कर्मसंयोगात् ॥४१॥ यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत ॥४२॥ न वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥ देशपृथक्त्वात् मन्त्रो ऽभ्याव-
CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्तते ॥ ४४ ॥ सन्नहनहरणे तथेति चेत् ॥४५॥ नान्यार्थत्वात् ॥ ४६ ॥

इति द्वादशाध्यायस्य द्वितीयः पादः ॥

---

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद् वा वैदिकानां स्यात् ॥ ३ ॥ सति चोपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणेऽस्मिन्ननारभ्य विधानस्य ॥ ७ ॥ सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥ हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद् विद्यमानत्वात् ॥ ११ ॥ पशौ तु संस्कृते विधानात् ॥ १२ ॥ योगाद्वा यज्ञाय तद्विमोके वि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्गः स्यात् ॥ १३ ॥ निशि यज्ञे प्राकृतस्याप्रवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥ कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥ वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥१६॥ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानं च यदि देवतार्थम् ॥ १८ ॥ आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन॥१९॥ स्याद्वा कालस्याशेषभूतत्वात् ॥२०॥ आरम्भविभागाच्च ॥२१॥ विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् ॥ २२ ॥ मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥ तथा चान्यार्थदर्शनम् ॥ २४ ॥ अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥ परिधेर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥२६॥ यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥ इतरो वा तस्य तत्र विधानात् ॥२८॥उभयोश्चाङ्गसंयोगः ॥२९॥ पशुसवनीयेषु विकल्पः स्यात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥ पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥ अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥ अधिकश्च गुणः साधारणे ऽविरोधात् कांस्यभोजिवदमुख्ये ऽपि ॥ ३४ ॥ तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥ न वा ऽविरोधात् ॥ ३६ ॥ शास्त्रलक्षणत्वाच्च ॥ ३७ ॥

इति द्वादशाध्याय द्वितीयः पादः ॥

---

विश्वजिति वत्सत्वङ्नामधेयाऽहतमितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ अविरोधो वा उपरिवासो हि वत्सत्वक् ॥ २ ॥ अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ ३ ॥ आगन्तुकत्वाद्वा स्वधर्मा स्यात् श्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वस्थानत्वाच्च ॥ ५ ॥ स्विष्टकृच्छ्रपणान्नेति चेत् ॥ ६ ॥ विकारः पवमानवत् ॥ ७ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥ एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात् ॥ ९ ॥ एकार्थास्तु विकल्प्येरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य ॥ १० ॥ अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥ नाश्रुतत्वात्॥१२॥ सति चाभ्यासशास्त्रत्वात् ॥१३॥ विकल्पवच्च दर्शयति ॥ १४ ॥ कालान्तरे ऽर्थवत्त्वं स्यात् ॥१५॥ प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥१६॥ समुच्चयस्त्वदोषनिर्घातार्थेषु ॥१७॥ मन्त्राणां कर्मसंयोगः स्वधर्मेण प्रयोगः स्याद् धर्मस्य तन्निमित्तत्वात् ॥१८॥ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य ॥ १९ ॥ भाषास्वरोपदेशे ऐरवत्प्रायवचनप्रतिषेधः स्यात् ॥२०॥ मन्त्रोपदेशो वा न भाषिकस्य प्रायोपपत्ते-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्भाषिकश्रुतिः ॥ २१ ॥ विकारः कारणाग्रहणे ॥२२॥ तन्न्यायत्वाददृष्टेऽप्येवम् ॥ २३ ॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥२४॥ मन्त्राणां करणार्थत्वात् मन्त्रान्तेन कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वात् ॥ २५ ॥ सन्ततवचनाद्धारायामादिसंयोगः ॥ २६ ॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २७ ॥ आघारे च दीर्घधारत्वात् ॥२८॥ मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥ संख्याविहितेषु समुच्चयो ऽसन्निपातित्वात् ॥ ३० ॥ ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् ॥३१॥ याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ ३२ ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३३ ॥ गुणार्थत्वादुपदेशस्य ॥ ३४ ॥ वषट्कारे नानार्थत्वात् समुच्चयः ॥ ३५ ॥ हौत्रास्तु विकल्प्येरन्नेकार्थत्वात् ॥ ३६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



समुच्चयो वा क्रियमाणानुवादित्वात् ॥३७॥ समुच्चयं च दर्शयति ॥ ३८ ॥

इति द्वादशाध्यायस्य तृतीयः पादः ॥

---

जपाश्चाकर्मयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥ समुच्चयं च दर्शयति ॥ २ ॥ याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥ क्रयणेषु त्वविकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ समुच्चयो वा प्रयोगद्रव्यसमवायात् ॥ ६ ॥ समुच्चयञ्च दर्शयति ॥ ७ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥ संख्यासु तु विकल्पः स्यात् श्रुतिविप्रतिषेधात् ॥ ९ ॥ द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात् तथा विकल्पे न नियमः प्रधानत्वात् ॥ १० ॥ द्रव्यत्वेऽपि समुच्चयो द्रव्यकर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥ क-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar .

Digitized by Arya Samaj Foundation Chennai and eGangotri



पाले ऽपि तथेति चेत् ॥ १२ ॥ न कर्मणः परार्थत्वात् ॥१३॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ श्रुते ऽपि पूर्ववत्त्वात् स्यात् ॥ १५ ॥ विकल्पे त्वर्थकर्मनियमः प्रधानत्वात् शेषे च कर्मकार्य्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥ उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥ असति चासंस्कृतेषु कर्म स्यात् ॥ १८ ॥ तस्य देवतार्थत्वात् ॥१९॥ विचारो वा तदुक्तहेतुः ॥२०॥ वचनादसंस्कृतेषु कर्म स्यात् ॥ २१ ॥ संसर्गे चापि दोषः स्यात् ॥ २२ ॥ वचनादिति चेत् ॥ २३ ॥ तथेतरस्मिन् ॥ २४ ॥ परिग्रहः कर्मणः कृतत्वात् ॥२५॥ स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥ अन्यो वोद्धृत्याहरणात् तस्मिंस्तु संस्कारकर्म शिष्टत्वात् ॥ २७ ॥ स्थानात्तु परिलुप्येरन् ॥ २८ ॥ नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ॥ ३० ॥ नित्यधा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रणाद्वा प्रतिषेधो गतश्रियः ॥ ३१ ॥ परार्थान्येको यजमानगणे ॥३२॥ अनियमोऽविशेषात् ॥३३॥ मुख्यो वा विप्रतिषेधात् ॥३४॥ सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३५ ॥ आम्नायवचनाच्च ॥ ३६ ॥ सर्वैर्वा तदर्थत्वात् ॥ ३७ ॥ गृहपतिरिति च समाख्यासान्यात् ॥ ३८ ॥ विप्रतिषेधे परम् ॥ ३९ ॥ हौत्रे परार्थत्वात् ॥ ४० ॥ वचनं परम् ॥ ४१ ॥ प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥ स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४३ ॥ फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥ सान्नाय्ये प्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४५ ॥ चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥ अन्वाहार्ये च दर्शनात् ॥ ४७ ॥

इति द्वादशाध्यायस्य चतुर्थः पादः ।

संपूर्णश्च द्वादशो ऽध्यायः ॥

मीमांसाशास्त्रञ्च सम्पूर्णम् ॥

शुभमस्तु ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीः ।

# वेदान्तदर्शनम् ।

---

अथातो ब्रह्मजिज्ञासा ॥ १ ॥ जन्माद्यस्य यतः ॥ २ ॥ शास्त्रयोनित्वात् ॥ ३ ॥ तत्तु समन्वयात् ॥ ४ ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वावचनाच्च ॥ ८ ॥ स्वाप्ययात् ॥ ९ ॥ गतिसामान्यात् ॥ १० ॥ श्रुतत्वाच्च ॥ ११ ॥ आनन्दमयो ऽभ्यासात् ॥ १२ ॥ विकारशब्दन्नेति चेन्न प्राचुर्य्यात् ॥ १३ ॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥ नेतरो ऽनुपपत्तेः ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नानुमानापेक्षा ॥ १८ ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ भेदव्यपदेशाच्चान्यः ॥ २१ ॥ आका-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शस्तल्लिङ्गात् ॥ २२ ॥ अत एव प्राणः॥२३॥ ज्योतिश्चरणाभिधानात् ॥ २४ ॥ छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ प्राणस्तथानुगमात् ॥ २८ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्॥२९॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासनात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

इति वैयासिकब्रह्मसूत्रे प्रथमाध्यायस्य
प्रथमः पादः समाप्तः ॥

---

सर्वत्र प्रसिद्धोपदेशात् ॥१॥ विवक्षितगुणोपपत्तेश्च ॥२॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥४॥ शास्त्रविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भको-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ (२) अत्ता चराचरग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥ (३) गुहां प्रविष्टवात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥ (४) अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥ सुख विशिष्टाभिधानादेव च ॥ १५ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥ (५) अन्तर्याम्यधिदेवादिषु तद्धर्म्मव्यपदेशात् ॥ १८ ॥ न च स्मार्त्तमतद्धर्म्माभिलापात् ॥ १९ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ (६) अदृश्यत्वादिगुणको धर्म्मोक्तेः ॥ २१ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ (७) रूपोपन्यासाच्च ॥ २३ ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ स्मर्य्यमाणमनुमानं स्यादिति ॥ २५ ॥ शब्दादिभ्यो ऽन्तः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिष्ठानान्नेति चेन्न तथा दृष्टयुपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २६ ॥ अत एव न देवता भूतञ्च ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

इति वैयासिकब्रह्मसूत्रे प्रथमाध्यायस्य द्वितीयः पादः ॥

---

(१) द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानुमानमतच्छब्दात् ॥ ३ ॥ प्राणभृच्च ॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ स्थित्यदनाभ्याञ्च ॥ ७ ॥ (२) भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥ धर्म्मोपपत्तेश्च ॥ ९ ॥ (३) अक्षरमम्बरान्तधृतेः ॥ १० ॥ सा च प्रशासनात् ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥ (४) ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ (५) दहर उत्त-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भ्यः ॥ १४ ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ १५ ॥ धृतेश्च महिम्नो ऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥१७॥ इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१८॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ अन्यार्थश्च परामर्शः ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ अनुकृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्यते ॥ २३ ॥ शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२५॥ तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥ अत एव च नित्यत्वम् ॥ २९ ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥ ज्योतिषि भावाच्च ॥ ३२ ॥ भावन्तु बादरायणो ऽस्ति हि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥ ३३ ॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥३४॥ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥ तदभावनिर्द्धारणे च प्रवृत्तेः ॥३७॥ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥३८॥ कम्पनात् ॥ ३९ ॥ ज्योतिर्दर्शनात् ॥ ४० ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ पत्यादिशब्देभ्यः ॥ ४३ ॥

इति वैयासिकब्रह्मसूत्रे प्रथमाध्यायस्य तृतीयः पादः ॥

---

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मन्तु तदर्हत्वात् ॥२॥ तदधीनत्वादर्थवत् ॥ ३ ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि [redacted] प्रकरणात् ॥६॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥७॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



महद्वच्च ॥ ८ ॥ चमसवदविशेषात् ॥ ९ ॥
ज्योतिरुपक्रमात्तु तथा ह्यधीयतएके ॥ १० ॥
कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥
न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च
॥ १२ ॥ प्राणादयो वाक्यशेषात् ॥ १३ ॥
ज्योतिषैकेषामसत्यन्ने ॥ १४ ॥ कारणत्वेन
चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १५ ॥
समाकर्षात् ॥ १६ ॥ जगद्वाचित्वात् ॥ १७ ॥
जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्
॥ १८ ॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्या-
नाभ्यामपि चैवमेके ॥ १९ ॥ वाक्यान्वयात्
॥ २० ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २१ ॥
उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २२ ॥
अवस्थितेरिति काशकृत्स्नः ॥ २३ ॥ प्रकृ-
तिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २४ ॥ अ-
भिध्योपदेशाच्च ॥ २५ ॥ साक्षाच्चोभया-
म्नानात् ॥ २६ ॥ आत्मकृतेः परिणामात्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥ २७ ॥ योनिश्च हि गीयते ॥ २८ ॥ एतेन सर्वे व्याख्याताः ॥ २९ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे प्रथमाध्यायस्य चतुर्थपादः समाप्तः ॥

---

अथ द्वितीयोऽध्यायः ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥ इतरेषाञ्चानुपलब्धेः ॥ २ ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥ न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२॥ भोक्ता-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पत्तेरविभागश्चेत् स्याल्लोकवत् ॥१३॥ तद-
नन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ भावे
चोपलब्धेः ॥ १५ ॥ सत्त्वाच्चावरस्य॥१६॥
असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वा-
क्यशेषात् ॥१७॥ युक्तेः शब्दान्तराच्च ॥१८॥
पटवच्च ॥ १९ ॥ यथा च प्राणादि ॥ २० ॥
इतरव्यपदेशाद्धिताकरणादिदोष प्रसक्तिः
॥ २१ ॥ अधिकन्तु भेदनिर्द्देशात् ॥ २२ ॥
अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ उप-
संहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥
देवादिवदपि लोके ॥ २५ ॥ कृत्स्नप्रसक्ति-
र्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ श्रुतेस्तु
शब्दमूलत्वात् ॥ २७ ॥ आत्मनि चैवं वि-
चित्राश्च हि ॥ २८ ॥ स्वपक्षदोषाच्च ॥२९॥
सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ विकरण-
त्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ न प्रयोजन-
वत्त्वात् ॥ ३२ ॥ लोकवत्तु लीलाकैवल्यम्
॥३३॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दर्शयति ॥३४॥ न कर्मविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ सर्वधर्म्मोपपत्तेश्च ॥३७॥

इति श्रीमत्कृष्णद्वैपायन-कृतब्रह्मसूत्रे
द्वितीयाध्यायस्य प्रथमः
पादः समाप्तः ॥

---

रचनानुपपत्तेश्च नानुमानम् ॥१॥ प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ अभ्युपगमे ऽप्यर्थाभावात् ॥ ६ ॥ पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ उभयथा हि न कर्मातस्तदभावः ॥ १२ ॥ समवायाभ्युपगमाच्च

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



साम्यादनवस्थितेः ॥ १३ ॥ नित्यमेव च भावात् ॥ १४ ॥ रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात् ॥ १५ ॥ उभयथा च दोषात् ॥ १६ ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥१७॥ समुदायउभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥१९॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तेरविच्छेदात् ॥ २२ ॥ उभयथा च दोषात् ॥ २३ ॥ आकाशे चाविशेषात् ॥ २४ ॥ अनुस्मृतेश्च ॥ २५ ॥ नासतोऽदृष्टत्वात् ॥ २६ ॥ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ अन्यभाव उपलब्धेः ॥ २८ ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ न भावोऽनुपलब्धेः ॥ ३० ॥ क्षणिकत्वाच्च ॥ ३१ ॥ नैकस्मिन्नसम्भवात् ॥३२॥ एवञ्चात्माऽकार्त्स्न्यम् ॥ ३३ ॥ न च पर्य्यायादप्यविरोधो

२

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विकारादिभ्यः ॥ ३४ ॥ अन्यावस्थितेश्चो-भयानित्यत्वादविशेषः ॥ ३५ ॥ प्रत्युरसामञ्जस्यात् ॥ ३६ ॥ सम्बन्धानुपपत्तेश्च ॥३७॥ अधिष्ठानानुपपत्तेश्च ॥ ३८ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३९ ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४० ॥ उत्पत्त्यसम्भवात् ॥ ४१ ॥ न च कर्तुः करणम् ॥ ४२ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥४३॥ विप्रतिषेधाच्च ॥४४॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रे
द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

---

न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्यसम्भवात् ॥३॥ शब्दाच्च ॥ ४ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥९॥ तेजोऽतस्तथा ह्याह ॥१०॥ आपः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥ ११ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ विपर्य्ययेण तु क्रमो ऽत उपपद्यते च ॥ १४ ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ज्ञो ऽतएव ॥ १८ ॥ उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ स्वात्मना चोत्तरयोः ॥ २० ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥ स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥ अविरोधश्चन्दनवत् ॥ २३ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥ गुणाद्वा लोकवत् ॥ २५ ॥ व्यतिरेको गन्धवत् ॥ २६ ॥ तथा च दर्शयति ॥ २७ ॥ पृथगुपदेशात् ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ॥३१॥
नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतर-
नियमो वाऽन्यथा ॥ ३२ ॥ कर्त्ता शास्त्रार्थ-
वत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥
उपादानात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां
न चेन्निर्देशविपर्ययः ॥ ३६ ॥ उपलब्धिव-
दनियमः ॥ ३७ ॥ शक्तिविपर्य्ययात् ॥३८॥
समाध्यभावाच्च ॥ ३९ ॥ यथा च तक्षोभ-
यथा ॥ ४० ॥ परात्तु तच्छ्रुतेः ॥ ४१ ॥ कृत-
प्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादि-
भ्यः ॥ ४२ ॥ अंशो नानाव्यपदेशादन्यथा
चापि दाशकितवादित्वमधीयतएके ॥४३॥
मन्त्रवर्णाच्च ॥४४॥ अपि च स्मर्य्यते ॥४५॥
प्रकाशादिवन्नैवं परः ॥ ४६ ॥ स्मरन्ति च
॥४७॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्यो-
तिरादिवत् ॥ ४८ ॥ असन्ततेश्चाव्यतिकरः
॥ ४९ ॥ आभास एव च ॥ ५० ॥ अदृष्टा-
नियमात् ॥५१॥ अभिसन्ध्यादिष्वपि चैवम्
॥ ५२ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥५३॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रे
द्वितीयाध्यायस्य तृतीयपादः समाप्तः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तथा प्राणाः ॥ १ ॥ गौण्यसम्भवात् ॥२॥ प्रतिज्ञानुपरोधाच्च ॥ ३ ॥ ततप्राक्श्रुतेश्च ॥ ४ ॥ तत्पूर्वकत्वाद्वाचः ॥ ५ ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ६ ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ७ ॥ अणवश्च ॥ ८ ॥ श्रेष्ठश्च ॥ ९ ॥ न वायुक्रिये पृथगुपदेशात् ॥ १० ॥ चक्षुरादिवत्तु तत् सहशिष्ट्यादिभ्यः ॥११॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति॥१२॥ पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ १३ ॥ अणुश्च ॥ १४ ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १५ ॥ प्राणवता शब्दात् ॥ १६ ॥ तस्य च नित्यत्वात् ॥ १७ ॥ तइन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १८ ॥ भेदश्रुतेः ॥ १९ ॥ वैलक्षण्याच्च ॥ २० ॥ संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २१ ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ २२ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रे
द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ तृतीयो ऽध्यायः ।

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमे ऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥ भाक्तं वा ऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥ कृतात्यये ऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ८ ॥ यथेतमनेवं च ॥ ९ ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ १० ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ११ ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ १२ ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १३ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१४॥ स्मरन्ति च ॥ १५ ॥ अपि च सप्त ॥ १६ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १८ ॥ न तृतीये तथोपलब्धेः ॥ १९ ॥ स्मर्य्यते ऽपि च लोके ॥ २० ॥ दर्शनाच्च ॥ २१ ॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २२ ॥ स्वाभाव्यापत्तिरुपपत्तेः ॥२३॥ नातिचिरेण विशेषात् ॥ २४ ॥ अन्याधिष्ठिते पूर्व्ववदभिलापात् ॥२५॥ अशुद्धमिति चेन्न शब्दात् ॥२६॥ रेतःसिग्योगो ऽथ ॥२७॥ योनेः शरीरम् ॥२८॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे
तृतीयाध्यायस्य प्रथमः पादः ॥

सन्ध्ये सृष्टिराह हि ॥ १ ॥ निर्म्मातारंचैके पुत्रादयश्च ॥ २ ॥ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ देहयोगाद्वा सो ऽपि ॥६॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥७॥ अतः प्रबोधो ऽस्मात् ॥८॥ स एव तु कर्मानुस्मृ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिशब्दविधिभ्यः ॥ ९ ॥ मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव हि तत् प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यात् ॥१५॥ आह च तन्मात्रम् ॥ १६ ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ अत एव चोपमा सूर्य्यकादिवत् ॥ १८ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ दर्शनाच्च ॥२१॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२२॥ तदव्यक्तमाह हि ॥२३॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥२४॥ प्रकाशादिवच्चावैशेष्यम् ॥२५॥ प्रकाशश्च कर्मण्यभ्यासात् ॥२६॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥ २७ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २८ ॥ प्रकाशाश्रयवद्वा तेजस्त्वा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तू ॥ २९ ॥ पूर्ववद्वा ॥ ३० ॥ प्रतिषेधाच्च ॥
॥ ३१ ॥ परमतः सेतून्मानसम्बन्धभेदव्य-
पदेशेभ्यः ॥ ३२ ॥ सामान्यात्तु॥३३॥ बुद्ध्य-
र्थः पादवत् ॥ ३४ ॥ स्थानविशेषात् प्रका-
शादिवत् ॥ ३५ ॥ उपपत्तेश्च ॥३६॥ तथा-
न्यप्रतिषेधात् ॥ ३७ ॥ अनेन सर्वगतत्वमा-
यामशब्दादिभ्यः ॥३८॥ फलमत उपपत्तेः
॥ ३९ ॥ श्रुतत्वाच्च ॥४०॥ धर्मं जैमिनिर-
त एव ॥ ४१ ॥ पूर्वं तु बादरायणो हेतुव्य-
पदेशात् ॥ ४२ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे
तृतीयाध्यायस्य द्वितीयः
पादः समाप्तः ॥

---

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥
भेदान्नेति चेन्नैकस्यामपि ॥ २॥ स्वाध्याय-
स्य तथात्वेन हि समाचारेऽधिकाराच्च ॥
॥ ३ ॥ सलिलवच्च तन्नियमः ॥ ४ ॥ दर्शय-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ति च ॥ ५ ॥ उपसंहारो ऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ६ ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ७ ॥ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ८ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ९ ॥ व्याप्तेश्चासमञ्जसम् ॥ १० ॥ सर्वाभेदादन्यत्रे मे ॥ ११ ॥ आनन्दादयः प्रधानस्य ॥ १२ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १३ ॥ इतरे त्वर्थसामान्यात् ॥ १४ ॥ आध्यानाय प्रयोजनाभावात् ॥ १५ ॥ आत्मशब्दाच्च ॥ १६ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १७ ॥ अन्वयादिति चेत् स्यादवधारणात् ॥ १८ ॥ कार्य्याख्यानादपूर्वम् ॥ १९ ॥ समान एवञ्चाभेदात् ॥ २० ॥ सम्बन्धादेवमन्यत्रापि ॥ २१ ॥ न वा विशेषात् ॥ २२ ॥ दर्शयति च ॥ २३ ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ २४ ॥ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २५ ॥ वेधाद्यर्थभेदा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त् ॥ २६ ॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २७ ॥ साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये॥२८॥ छन्दत उभयाविरोधात् ॥२९॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३० ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३१ ॥ अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३३ ॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३४ ॥ इयदामननात् ॥ ३५ ॥ अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३६ ॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥३७॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३८ ॥ सैव हि सत्यादयः ॥३९॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥४०॥ आदरादलोपः ४१॥ उपस्थितेऽतस्तद्वचनात् ॥ ४२ ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लम् ॥ ४३ ॥ प्रदानवदेव तदुक्तम् ॥ ४४ ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४५ ॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४६ ॥ अतिदेशाच्च ॥४७॥ विद्यैव तु निर्धारणात् ॥ ४८ ॥ दर्शनाच्च ॥ ४९ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ५० ॥ अनुबन्धादिभ्यः ॥ ५१ ॥ प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ५२ ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥५३॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५४ ॥ एक आत्मनः शरीरे भावात् ॥ ५५ ॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५६ ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्॥५७॥ मन्त्रादिवद्वाऽविरोधः ॥५८॥ भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति॥५९॥ नाना शब्दादिभेदात् ॥६०॥ विकल्पोऽविशिष्टफलत्वात् ॥६१॥ काम्यास्तु यथाकामं समुच्चीये-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रन्न वा ऽपूर्वहेत्वभावात् ॥६२॥ अङ्गेषु यथाश्रयभावः ॥ ६३ ॥ शिष्टेश्च ॥ ६४ ॥ समाहारात् ॥६५॥ गुणसाधारण्यश्रुतेश्च॥६६॥ न वा तत् सहभावाश्रुतेः॥६७॥दर्शनाच्च॥६८॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे तृतीयाध्यायस्य तृतीयः पादः समाप्तः ।

---

पुरुषार्थो ऽतः शब्दादिति बादरायणः ॥ १॥ शेषत्वात् पुरुषार्थवादो यथा ऽन्येष्विति जैमिनिः ॥ २ ॥ आचारदर्शनात् तच्छ्रुतेः ॥४॥ समन्वारम्भणात् ॥५॥ तद्वतो विधानात् ॥ ६ ॥ नियमाच्च ॥ ७ ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ तुल्यन्तु दर्शनम् ॥ ९ ॥ असार्वत्रिकी॥१०॥ विभागः शतवत् ॥ ११ ॥ अध्ययनमात्रवतः ॥ १२ ॥ नाविशेषात् ॥ १३ ॥ स्तुतये ऽनुमतिर्वा ॥ १४ ॥ कामचारेण चैके ॥१५॥ उपमर्दञ्च ॥ १६ ॥ ऊर्ध्वरेतःसु च शब्दे हि ॥१७॥ परामर्शं जैमिनिरचोदना चापव-



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दति हि ॥१८॥ अनुष्ठेयं बादरायणः साम्य-
श्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥
स्तुतिमात्रमुपादानादिति चेत् नापूर्वत्वा-
त् ॥ २१ ॥ भावशब्दाच्च ॥ २२ ॥ पारिप्ल-
वार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥
तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ अत
एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ सर्वा-
पेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ श-
मदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्ग-
तया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ सर्वा-
न्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥
अबाधाच्च ॥ २९ ॥ अपि च स्मर्य्यते ॥ ३० ॥
शब्दश्चातो ऽकामकारे ॥ ३१ ॥ विहितत्वा-
च्चाश्रमकर्मापि ॥ ३२ ॥ सहकारित्वेन च
॥ ३३ ॥ सर्वथापि तु तएवोभयलिङ्गात्
॥ ३४ ॥ अनभिभवञ्च दर्शयति ॥ ३५ ॥
अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ अपि च
स्मर्य्यते ॥ ३७ ॥ विशेषानुग्रहश्च ॥ ३८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतस्त्वितरज्यायो लिङ्गाच्च ॥ ३९ ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

इति श्रीबादरायणब्रह्मसूत्रे तृतीयाध्यायस्य चतुर्थपादः समाप्तः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ चतुर्थोऽध्यायः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥ २ ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ न प्रतीकेन हि सः ॥ ४ ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥ तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥ अतो ऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ यदेव

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्ययेति हि ॥ १८ ॥ भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे
चतुर्थाध्यायस्य प्रथमः पादः ॥

---

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अत एव च सर्वाण्यनु ॥ २ ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ भूतेष्वतः श्रुतेः ॥ ५ ॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥ समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ तदपीतेः संसारव्यपदेशात् ॥ ८ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनातः ॥ १० ॥ अस्यैव चोपपत्तेरेष उष्मा ॥ ११ ॥ प्रतिषेधादिति चेन्न शारीरात् ॥ ११ ॥ स्पष्टो ह्येकेषाम् ॥ १३ ॥ स्मार्यते च ॥ १४ ॥ तानि परे तथा ह्याह ॥१५॥ अविभागो वचनात् ॥ १६ ॥ तदोकोग्रज्व-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्त-च्छेषगत्यनुस्मृतियोगाच्च हार्द्दानुगृहीतः शताधिकया ॥ १७ ॥ रश्म्यनुसारी ॥ १८ ॥ निशि नेति चेन्न सम्बन्धात् ॥ १९ ॥ यावद्देहभावित्वाद्दर्शयति च ॥ २० ॥ अतश्चायने ऽपि हि दक्षिणे ॥ २१ ॥ योगिनः प्रति च स्मर्य्यते स्मार्त्ते चैते ॥ २२ ॥

इति श्रीकृष्णद्वैपायनब्रह्मसूत्रे चतुर्थाध्यायस्य द्वितीयपादः समाप्तः ॥

---

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ तडितो ऽधि-वरुणः सम्बन्धात् ॥ ३ ॥ आतिवाहिकस्त-ल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषित-त्वाच्च ॥ ८ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्य्यात्यये तदध्यक्षेण सहातः पर·

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मभिधानात् ॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत् क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥ १६ ॥

इति श्रीकृष्णद्वैपायनब्रह्मसूत्रे चतुर्थाध्यायस्य तृतीयपादः समाप्तः ॥

सम्पाद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥ अविभागेनैव दृष्टत्वात् ॥ ४ ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वभावादविरोधः ॥ ७ ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अत एव चानन्याधिपतिः ॥ ९ ॥ अभावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विकल्पामननात् ॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तत्त्वाभावे सन्ध्यवदुपपद्यते ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ जगद्व्यापारवर्ज्जम् ॥ १७ ॥ प्रकरणादसन्निहितत्वाच्च ॥ १८ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १९ ॥ विकारावर्त्ति च तथा हि स्थितिमाह ॥ २० ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २१ ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २२ ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २३ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे चतुर्थाध्यायस्य चतुर्थपादः समाप्तः ॥

समाप्तं च वेदान्तदर्शनम् ।

---

शुभमस्तु ।

पं० इन्द्र विद्यावाचस्पति स्मृति संग्रह

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

